ना पदार्थानामेवाकाङ्क्षायोग्यतासन्निध्यवच्छिन्नानाम्, पदश्रवणाभावेऽपि हि यदा श्वेतगुण द्रव्य पश्यति हेषाशब्दादश्वजातिञ्चानुमिनोति खुरविक्षेपादिजनितशब्देन क्रिया बुध्यते तदा श्वेतोऽश्वो धावतीत्यवगच्छति, यत्र च मानसादपचाराच्छृण्वन्नपि पदानि न पदार्थानवधारयति तत्र न भवति वाक्यार्थप्रत्यय इत्यन्वयव्यतिरेकवत्त्वात् पदार्थाना वाक्यार्थबोधकत्व निश्चीयत इति तदप्ययुक्तम्, पुरुषव्यापारस्य तद्व्यतिरिक्तस्य पूर्वं प्रतिषिद्धत्वाद्वाक्यार्थानुपपत्ते, तत्सत्त्वेऽपि पदार्थात्तस्याभेदे पदार्थ एव स्यान्न वाक्यार्थः, ततश्च वाक्यार्थस्य पदार्थगम्यत्वात् पदार्थस्य सामान्यात्मकतयाऽकार्यत्वेन धर्मरूपता न स्यात्। सामान्यस्य नित्यतया च वर्तमानत्वात् प्रत्यक्षाद्यवतारेण चोदनाया अनुवादकत्वं स्यात्। तथा च तद्विषये प्रवृत्ता चोदना प्रमाण न स्यात्, पदानामपि स्मृत्युत्पादकत्वेनैव प्रामाण्यस्य भवद्भिः स्वीकारात् शाब्दस्य न क्वचिदर्थे प्रामाण्यं भवेत्। किञ्च पदार्था वाक्यार्थं किं शब्दप्रमाणतयाऽवबोधयन्ति, उतानुमानत्वेन, किं वाऽर्थापत्तित्वेन, आहोस्वित् प्रमाणान्तरत्वेन, नाद्यः पदार्थानामशब्दात्मकत्वात्। न द्वितीय, वाक्यार्थप्रतिबद्धतया पदार्थाना प्रागप्रतिपत्तेरनुमानानवतारात्, न च वाक्यार्थो न प्रमाणान्तरगोचर, अतोऽनवगतो पदार्थव्यापकताऽनुमानगोचर इति वाच्यम्, अन्यत्रापि तथाभावप्रसक्ते । वाक्यार्थाविनाभावित्वावगमे वा चोदनाया अनुवादरूपताप्रसक्त्याऽप्रामाण्य स्यात्। न वा पदार्थाना पक्षधर्मता क्वचिदवगता न च तदवगममन्तरेणानुमानप्रवृत्ति । न तृतीय, चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमव्याघातात्, अनुमानादर्थापत्तेरव्यतिरेकाच्च। अत एव न तुर्यविकल्पोऽपि युक्त । न च पदेभ्य पदार्थास्तेभ्यश्च वाक्यार्थ प्रतीयत इति परम्परया चोदनाया धर्मं प्रति निमित्तत्वमिति वक्तव्यम् तथा सति श्रोत्रात पदज्ञान तत पदार्थविज्ञान तस्माच्च धर्मज्ञानमिति परम्परया प्रत्यक्षलक्षणोऽर्थो धर्म स्यात्, साक्षाद्धर्मं प्रति न प्रत्यक्षस्य व्यापार इति तु चोदनायामपि समानम्। यदुक्त पदार्थस्यापि स्मारकत्वान्न वाचकम्, न वा स्मर्यमाणपदार्थसम्बद्धतयाऽविज्ञाते वाक्यार्थे पदार्थस्मरणान्यथानुपपत्त्या प्रतिपत्तिर्युक्ता, न च सम्बन्धो वाक्यार्थेन सह कस्यचिदवगन्तु शक्य, सम्बन्धप्रतिपत्ते सम्बन्ध्यवगमपूर्वकत्वात्, स्मर्यमाणपदार्थप्रतिपत्तेर्यथानुपपत्तिञ्च विना नान्यतो वाक्यार्थप्रतिपत्ति, तामन्तरेण च नान्यथानुपपत्ते प्रवृत्तिरितीतरेतराश्रयप्रसक्तेर्न कथञ्चिद्वाक्यार्थप्रतिपत्तिः स्यात्। मानसापचारस्थलेऽपि न पदार्थानवगमाद्वाक्यार्थानवगम किन्तु विशिष्टपदसमुदायात् कथञ्चिदभिन्नस्य वाक्यस्यैवानवबोधात् तत्र वाक्यार्थप्रतिपत्तिः। न ह्युपहितमनसो वाक्यात्मकपदाना श्रोत्रसम्बन्धमात्रेणावगम, न चानवगत स्वरूपेण वाक्य वाक्यार्थसम्बद्धत्वेन वा स्वार्थं प्रतिपादयत्यतिप्रसङ्गात्। किञ्चोपहतमना यदि शृणोति पदानि

त्मिमिति [illegible]वधारयत्ययर्म, न च तदर्थावधारणं परामर्शरूपम्, तच्च न सम्भवति, उपप्लव मनस्कत्वादिति वाच्यम्, पदश्रवणस्याप्यवधारणात्मकत्वात्तदात्मकस्य च तच्छ्रवणस्य [illegible] दर्शनादिवत् परमार्थतोऽश्रवणरूपत्वात्, अविकल्पज्ञानस्याज्ञानरूपत्वाच्च । अपि च पूर्वपदानुविद्धमन्त्यपदं हि वाक्यम्, पूर्वपदानि च स्वाभिधेयविशिष्टतया चरमपदप्रतिपत्तिकाले परामृश्यमानानि वाक्यार्थप्रतिपत्तिजनकानि, तथा च पदार्थानवगमे वाक्यस्यैव स्वार्थाभिधानानुपपत्त्याऽनवगमात् कथं ततो वाक्यार्थप्रतिपत्ति भवेत्, तथाहि गौर्गच्छतीति [illegible]प्रयोगे गोशब्दात् सामान्यविशेषात्मकं पदार्थं गच्छत्यादिक्रियासापेक्षं प्राक् प्रतिपद्यते, [illegible] तमेव प्रतिनियतगमिक्रियावच्छिन्नमवगच्छति, तत क्रिया [illegible] सामान्यविशेषात्मको वाक्यार्थो व्यवतिष्ठते पदसमुदायात्मकाद्वाक्यात् पदार्था[illegible] तस्य प्रतिपत्तौ, यस्मिन्नुच्चरिते यः प्रतीयते स एव तस्यार्थ इति शाब्दिकानां व्यवहारात्, [illegible] पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थप्रत्यय इत्यपास्तम्, अतो नाभि[illegible] क्रियाकारकादीनामेकान्ततोऽभिधानम्, पदार्थान्तरासक्तपदार्थ[illegible] प्रसक्तेनैव वाक्यार्थस्याभिधानेन शेषपदोच्चारणवैयर्थ्यप्रसङ्गात्, प्रति[illegible] गौरित्युक्तौ गच्छतीत्यादिक्रियाविशेषाकाङ्क्षाभावप्रसङ्गाच्च, तत [illegible]त्वात् । किञ्च विशेषाणामानन्त्यात् सङ्केतकरणासम्भवात् सङ्केतितस्य चातिप्रसक्तत्वे प्रतिपादकत्वायोगात् पदार्थानां विशेषप्रत्यायनसामर्थ्यं न स्यात्, सामान्यस्य चार्थक्रियाऽनिर्वर्त्तकत्वेन व्यापित्वेन चानयनादिक्रियासंसर्गाभावाच्च पदप्रति[illegible] स्यात्, तस्मात् सामान्यशब्दार्थवादिप्रकल्पितं पदाभिधेय[illegible], विशेषाः शब्दवाच्या इति द्वितीयपक्षोऽपि न युक्त, एकस्यैव [illegible] विवक्षितदुग्धशब्दवाच्यत्वे एकविशेषव्यतिरेकेणान्येषां न स्यात्, [illegible] वाच्यत्वे चैकस्मिन्नपि पयसि बहुत्वप्रसङ्ग, परस्परविविक्तपय परमाणूनां [illegible], [illegible]व्यतिरेकेण पयसोऽनभ्युपगमात् तथा तस्याप्रतीतेश्च । न चैककार्यकारि[illegible] तस्यापि वस्तुत्वे तद्रूपत्वात् अवस्तुत्वे कार्यविरोधात् । तेषामेकत्रैव सामर्थ्ये तस्यैकस्यैकपरमाणुरूपत्वेऽनुपलभ्यताप्रसङ्गात्, अनेकाणुरूपत्वे एककार्यत्वविरोधात् एकस्य तत्कर्तृकत्वविरोधाच्च, स्थूलैकवस्तुनस्तदेककार्यत्वे तस्य समानरूपत्व स्यात् स्वारम्भाव यवद्रव्यव्यापकैकरूपत्वादवश्यं विशेषमात्रवादत्यागः स्यात् । तृतीयविकल्पोऽपि प्रत्येकपक्षभाविदोषप्रसङ्गान्नाभ्युपगन्तुं युक्त, परस्परनिरपेक्षसामान्यविशेषयोरभावेनाङ्गुलिद्वयाभावे तत्संयोगवत्तदाश्रयोभयवाच्यायोगात् । प्रतिनियतसामान्यविशेषयोरनभिधाने प्रवृत्त्यादिव्य

---

१ स्वस्यारम्भकद्रव्येषु व्यापकतया वर्तमानं यदेकं तस्य सामा यरूपत्वादिति भाव ॥

सूत्रमिति, अनन्तार्थराशिसूचनात् सूते वाऽस्मादर्थराशिं शेते वाऽस्मिन्नर्थसमूह श्रूयते वाऽस्मादनेकोऽर्थ इति निरुक्तिवशात् सूत्रम्, अर्यत इत्यर्थस्तस्य साक्षादभिधेयो गम्यश्च सामर्थ्यात्तस्य स्थानमेव सूत्रम्, यथार्थं सूत्रार्थव्यवस्थापनात् सूत्रान्तरनिरपेक्षस्य तस्यार्थव्यवस्थापने प्रमाणान्तरबाधया तदर्थस्य तत्सूत्रस्योन्मत्तवाक्यवदसूत्रत्वापत्तेः, अत एव निर्युक्त्याद्यपेक्षत्वात् सूत्रार्थस्य न सूत्रमात्रेणैवार्थस्य पौर्वापर्येणाविरुद्धस्य प्रतिपत्तिः, अत्यथाथन्यथाऽपि तस्याविवृतस्य श्रुते । अर्थस्य यथाव्यवस्थितस्य प्रतिपत्तिस्तु द्रव्यार्थपर्यायार्थलक्षणनयगह्वररूपारण्ये लीना, तथा च दुरधिगम्या । सकलनयसम्मतार्थस्य प्रतिपादकं सूत्रम् 'जीवो अणाइणिहणो' इत्यादिवाक्यवत्प्रमाणार्थसूचकं स्यात्, प्रवृत्तानि च नयैरेव सूत्राणि, तथा चागमः, 'णत्थि णएण विहूण सुत्तं अत्थो य जिणमए किंचि । आसज्ज उ सोआरं णए णअविसारओ बूआ' [ आवश्यकनि० उवघायनि० गा० ३८ ] इति ॥ ६४ ॥

यत एवमनेकान्तात्मकार्थप्रतिपादकत्वेन सूत्रं व्याख्येयम्—

तम्हा अहिगयसुत्तेण अत्थसंपायणम्मि जइयव्वं ।
आयरियधीरहत्था हंदि महाणं विलंबेंति ॥ ६५ ॥

तस्मादधिगतसूत्रेणार्थसम्पादने यतितव्यम् ।
आचार्यधीरहस्ता हंदि महाज्ञां विडम्बयन्ति ॥ छाया ॥

तस्मादिति, तस्मादधीततत्कालव्यावहारिकाशेषसिद्धान्तेनार्थविषयप्रमाणनयस्वरूपनिर्धारणे यतितव्यम्, अर्थात् सूत्रं श्रोतव्यं श्रुत्वा च नयसर्वसंवादविनिश्चयपरिशुद्ध भावनीयमन्यथाऽऽचार्या धीरहस्ता अशिक्षितशास्त्रार्था, अनभ्यस्तकर्माऽपि कर्मणि धृष्टतया व्यापृतत्वे यथा हस्तस्ते धीरहस्ता आचार्याश्च ते धीरहस्ताश्च आचार्यधीरहस्ता अशिक्षितधृष्टाश्चेति यावत्, हंदि गृह्यताम्, ते तादृशा महाज्ञामाज्ञाशासनं विडम्बयन्ति । तथा च दृश्यन्त एव वस्त्रपात्रादिधर्मोपकरणसमन्विताना यतीनां नैर्ग्रन्थ्याभावान्न सम्यग्व्रतानि तीर्थकृद्भ्य प्रतिपादितानीति प्रतिपादयन्तः सर्वज्ञवचनं यथावस्थितं नावगच्छन्तो दिग्वाससः, तथाहि यद्रागाद्युपचयनिमित्तं नैर्ग्रन्थ्यविपक्षरूपं तत्तदुपचयहेतुः, यथा विशिष्टशृङ्गारानुपक्ताङ्गनाङ्गसङ्गादिकम्, यथोक्तनैर्ग्रन्थ्यविपक्षभूतञ्च श्वेतवाससा वस्त्रादिग्रहणमिति, तदसमीचीनम्, रागाद्युपचयनिमित्तं हि किमेकदेशनैर्ग्रन्थ्यम्, आहोस्वित् सर्वथा नैर्ग्रन्थ्यम्, तत्र न परमपक्षो युक्तः, तथाभूतनैर्ग्रन्थ्यस्य मुक्तव्यतिरेकेणासम्भवात् मिथ्यात्वाविरतिप्रमादकषाययोगलक्षणप्रवृत्ताष्टविधकर्मसम्बन्धस्य सन्ततत्वात्तदभावस्य चात्यन्ति

कस्य निश्शेषतो मुक्तेष्वेव सम्भवात्ततश्च कथं नस्य रागाद्यपचयहेतुतेति हेतोर्विशेषणासिद्धत्वात् । न प्रथमं, देशनैर्ग्रन्थ्यं हि किं सम्यग्ज्ञानादितारतम्ये तोपचीयमानमथवा वस्त्रग्रहणाद्यभावरूपम्, नाद्य, तथाभूतस्य वस्त्रादिग्रहणस्य सम्यग्ज्ञानादिविपक्षत्वेनासिद्धे र्हेतोर्विशेष्यासिद्धिप्रसङ्गात् । नान्त्य, वस्त्राद्यभावस्य रागाद्यपचयनिमित्तत्वासिद्धत्या हेतो र्विशेषणासिद्धत्वात् । वस्त्राद्यभावो रागाद्यपचयहेतुरिति न वक्तव्यम्, अतिशयरागवद्भिः पारापतादिभिर्व्यभिचारात् । न च पुरुषत्वे सति वस्त्राभावो रागाद्यपचयहेतुरिति वाच्यम्, वल्कनिकटनाहलैर्व्यभिचारात् । आर्यदेशोत्पत्तिमत्पुरुषत्वे सतीति न विशेषणीयम्, तथाभूतकामुकपुरुषैर्व्यभिचारात् । व्रतधारितथाभूतपुरुषत्वे सतीत्यपि न चारु, तथाभूतपाशुपतैर्व्यभिचारात् । न चार्हतशासनप्रतिपत्तिमत्तथाभूतपुरुषत्वे सतीति विशेषणमुपादीयत इति वाच्यम्, उन्मत्तदिगम्बरैर्व्यभिचारात्, अनुन्मत्तत्वे सतीति विशेषणे मिथ्यात्वोपेतद्रव्य लिङ्गावलम्बिदिग्वाससा व्यभिचारः, सम्यग्ज्ञानादिसमन्वितपुरुषत्वे सतीत्याद्युक्तौ तु विशेषणस्यैव स्वसाध्यसाधनसामर्थ्ये विशेष्यस्य वैयर्थ्यम्, विशिष्टध्रुवसहननविकलानामर्वाक्कालभाविपुरुषाणां वस्त्रादिधर्मोपकरणाभावे यतियोग्याहारविरह इव विशिष्टशरीरस्थितेरभावतो न सम्यग्दर्शनादिसमन्वितत्वविशेषणोपपत्तिरिति विशेष्यसद्भावो विशेषणस्य बाधक एव । ननु वस्त्रादिपरिग्रहस्तृष्णापूर्वकः, तस्याः सत्त्वे रागादेरवश्यम्भावात् सम्यग्दर्शनादेस्तद्विपक्षत्वात्तृष्णाप्रभववस्त्रग्रहणाभाव स्वकारणनिवृत्तिमन्तरेणानुपपद्यमानो रागादिविपक्षभूतसम्यग्ज्ञानाद्युत्कर्षविधायकत्वात् कथं तद्भावबाधकत्वेनोपदिश्यत इति चेन्न, वस्त्रादिपरिग्रहस्य तृष्णानिमित्ततायामाहारग्रहणस्यापि तथात्वप्रसक्तेः । न चाहारग्रहणं न परिग्रहव्यवहारविषयमिति वाच्यम्, मूर्च्छाविषयत्वे तस्य परिग्रहशब्दवाच्यत्वोपपत्तेः । न चाहारो ज्ञानाद्युपष्टम्भनिमित्तशरीरस्थित्यादिनिमित्तं गृह्यते न तु मांसाद्युपचयवच्छरीरवृद्ध्यर्थं सकृच्चन्दनादिवदुपभोगार्थं वेति नासौ तृष्णापूर्वक इति वाच्यम्, वस्त्रादिधर्मोपकरणग्रहणेऽपि समानत्वात् । न चाहारमन्तरेण चिरतरकालशरीरस्थितेरसम्भवाददर्शनाद्वेदनोपशमादिभिः षड्भिर्निमित्तैस्तस्य ग्रहणं न तु तृष्णापूर्वकं तद्ग्रहणमिति वाच्यम्, अनुत्तमसंहननस्य विशिष्टध्रुवापरिकर्मितचित्तवृत्तेः कालातिक्रान्त्यादिवसतिपरिहारकृतप्रयत्नस्य षड्विधजीवनिकायविध्वंसविधाय्यन्याद्यनारम्भिणः शीताद्युपद्रवाद्वस्त्रादिग्रहणमन्तरेण शरीरस्थितेरभावात्तद्ग्रहणस्यापि न्याय्यत्वात् । तथा वाय्वादिनिमित्तप्रादुर्भूतविक्रियावल्लिङ्गसंवरणप्रयोजनपटलाद्युपधिविशेषस्य च ग्रहणं शीतादिबाधोपजायमानार्तध्यानप्रतिषेधार्थं युक्तकल्पाहृग्राह्यत्व किमिति नेष्यते । न च स्त्रीसङ्गचन्दनाद्यभावोपजायमानसंक्लेशपरिणामनिवर्हणार्थं कन्यादेरपि ग्रहणं प्रसज्यत इति वाच्यम्, अङ्गनासम्प्रयोगसङ्कल्पप्रभवस्येवापरिणामोपशमार्थं

वृष्यतरमात्राद्याहारग्रहणस्यापि प्रसक्ते, क्षुद्वेदनाप्रशमनिमित्तत्रिकोटीपरिशुद्धाहारग्रहणवत्। तथाभूताहारग्रहणे सुतरां क्लिष्टाध्यवसायोत्पत्तिप्राबल्यान्न तद्ग्रहणमिति चेत्समानं वस्त्रादिग्रहणेऽपि। न च वस्त्राद्यभावे संक्लेशपरिणामप्रादुर्भावः कातराणामेव न तु दिग्वाससां स्वशरीरमपि काष्ठवन्मन्यमानानामिति वाच्यम्, आर्तध्यानोपगतानामनन्तसत्त्वोपमर्दविधायनलारम्भादिप्रतिषिद्धाचरणवत्तया तेषामुपलम्भेनानुभवविरोधात्, तदनाचरणवतस्त्वात्मनिमित्तत्वेनाविरत्याश्रयणादयतित्वस्य न्यायतः प्रसक्तेः। शीतादिदुःखमसहमानो न समाराधनानुपयातुं क्षम इति चेत्तुल्यं क्षुद्वेदनादुःखासहनेऽपि, न चाहारग्रहणं मुक्तिमार्गाविरोधीति वाच्यम्, अत एव वस्त्रादिग्रहणेऽप्यदोषात्। न च वस्त्रादेर्मलादिदिग्धस्य सम्मूर्छनाजन्तुसम्भवहेतुतया तद्ग्रहणे तद्व्यापत्तेरवश्यंभाविनः मुक्तिमार्गविरोधित्वं तस्यासिद्धमिति वाच्यम्, आहारग्रहणेऽपि सम्मूर्च्छनाद्यनेकजन्तुसम्पातहेतुत्वस्य तत्परिभोगनिमित्ततद्विनाशस्य च समानत्वात्। अथ विधानेन तत्परिभोगादिकं विदधतो न सत्त्वव्यापत्तिर्व्यापत्तौ वा शुद्धाशयस्य तद्रक्षायां यत्नवतो गीतार्थस्य ज्ञानादिपुष्टालम्बनप्रवृत्तेरहिंसकत्वान्न दूषणं मुक्तिमार्गविरोधीति चेत्तर्हि वस्त्रादिग्रहणमप्येवं क्रियमाणं न मुक्तिमार्गविरोधि भवेत्, तथा चागमोक्तविधिना वस्त्रादिग्रहणस्य हिंसाद्यपायरक्षणनिमित्ततया मुक्तिमार्गसम्यग्ज्ञानाद्युपबृंहकत्वात्तत्परित्यागस्य स्वर्गापवर्गानयत्नपेक्षया तद्बाधकत्वाद्विशेषणमङ्गावे सम्यग्ज्ञानाद्यन्वितत्वे सतीति विशेषणमसिद्धम्, सति चास्मिन् विशेष्यमसिद्धमतो न रागाद्यपचयनिमित्तता परव्यावर्णितनग्नरूपस्य नैर्ग्रन्थ्यस्य सिद्धा। अत एव व्यावर्णितस्वरूपनैर्ग्रन्थ्यविपक्षभूतत्वेऽपि वस्त्रादिग्रहणस्य न रागाद्युपचयं प्रति गमकत्वम्, तद्विरुद्धेन सम्यग्दर्शनाद्युपचयेन यथोक्तवस्त्रादिग्रहस्य व्याप्तत्वेन तद्विरुद्धसाधकत्वात्। दृष्टान्तस्यापि परव्यावर्णितनैर्ग्रन्थ्यविपक्षभूतत्वासिद्धेः साधनविकलता। न च य एवोक्तग्रन्थवस्त्रादिरप्युपशमगमहिम्नोर्वैराग्यभाववशीकृतचेतसो योगिनो रागाद्यपचयहेतुः, भरतेश्वरप्रभृतिषु तस्य तत्प्रक्षयहेतुत्वेन 'जे जत्तिआ इ हेऊ भवस्स' इत्यादि शास्त्रे श्रवणात्। रागाद्यपचयनिमित्तवैर्ग्रन्थ्यविपक्षभूतत्वञ्च वस्त्राद्युपादानस्यासिद्धम्, धर्मोपकरणत्वेन तस्य ग्रन्थत्वानुपपत्तेः, तथा च प्रयोगः, अर्हन्मार्गोक्तक्रियाव्यवस्थितानां सम्यग्दर्शनादिसम्प्रयुक्तानां यतीनां वस्त्रादिकं न ग्रन्थः, धर्मोपकरणत्वात्, प्रमार्जनादिनिमित्तोपादीयमानपिच्छिकादिवत्, यत्तु कर्मबन्धहेतुतया ग्रन्थत्वेन प्रसिद्धं तद्धर्मोपकरणमपि न भवति यथा लुब्धकादेर्मृगादिवधनिमित्तं वागुरादिकम्। न च धर्मोपकरणत्वं वस्त्रादेरसिद्धम्, वस्त्राद्यन्तरेण यतीनामुक्तलक्षणानामर्हत्प्रणीतानलपरित्यागाग्निभक्षणस्य व्रतसमूहस्य सर्वथा संरक्षणहेतुत्वानुपपत्तेः, यच्च व्रतसंरक्षणहेतुस्तद्धर्मोपकरणत्वेन परस्यापि सिद्धम्, यथा पिच्छिकादि, वैधर्म्येण वागुरादि। न च

पिच्छिकादेरभिष्वङ्गहेतुत्वानुपपत्तेर्धर्मोपकरणत्वं युक्तं न वस्त्रादेस्तद्विपर्ययादिति वाच्यम्, अनभिष्वङ्गनिमित्तत्वेन वस्त्रस्यापि धर्मोपकरणत्वाभ्युपगमात्, अभिष्वङ्गनिबन्धनस्य शरीरादेरपि धर्मोपकरणत्वात्, न हि शरीरेऽप्यप्रतिबद्धानां विदितवेद्यानां साधूनां वस्त्रादिषु मनागभिनिवेशः, परेणाप्यभ्युपगमनीयमेतत्, अन्यथा शुक्लध्यानाग्निना कर्मेन्धनं भस्मसात्कुर्वतः परित्यक्ताशेषसङ्गस्य केनचित् तदुपसर्गकरणबुद्ध्या भक्त्या वा वस्त्राद्यावृतशरीरस्य प्रसङ्गात् परमयोगिनो मुक्तिसाधकत्वं न स्यात्, स्वयमादत्तवस्त्रादेरभिष्वङ्गनिमित्ततया न धर्मोपकरणत्वमिति चेत्, न, स्वयं गृहीतपिच्छिकादिनाऽव्यभिचारात् । न च पिच्छिकाया अभावेऽप्रमार्जितासनाद्युपवेशनादिसम्भवेन सूक्ष्मसत्त्वव्यापत्तिसद्भावे प्राणातिपातविरमणादिमहाव्रतधारणानुपपत्तेस्तस्य ग्रहणं धर्मोपकरणत्वञ्चात एवेति वाच्यम्, एवं पात्रस्यापि धर्मोपकरणत्वात्तद्ग्रहणात्तदन्तरेणैकत्रैव हस्त एव वा भुक्तिक्रियां विदधतामारम्भदोषतः करचरणक्षालने च जलगतासङ्ख्येयादिसत्त्वव्यापत्तितो महाव्रतधारणानुपपत्तेः । न च प्रतिगृहं भिक्षामात्रस्योदनस्योपभोगाद्धस्तपुटोज्झनीकरणाद्वायमदोष इति वक्तव्यम्, तथाभूतप्रवृत्तेः पुष्पास्वनुपलम्भात्, प्रवृत्तावपि प्रवचनोपघातप्रसक्तेः, तस्य चाबोधिबीजत्वात् 'छक्कायदयावंतो वि संजओ दुल्लहं कुणइ बोहिं । आहार०' इत्याद्यागमप्रामाण्यात्, न च गृहस्थभाजनेऽपि पूर्वमप्युदकं निक्षिप्य तत्र सर्वं सम्पद्यते, तत्र नूनं सूक्ष्मत्वादप्कायस्य घातकत्वात्, गृहिणा तच्छोधनेऽतिशययत्नानुपपत्तेश्च । न च करे एव प्रत्युपेक्षणात्सत्त्वानुपलब्धौ तदुपभोगान्न दोष इति वाच्यम्, तथाऽनिरीक्षणात्, तदनुपलम्भेऽपि तदभावनिश्चयायोगात् । न च यत्ननिरीक्षणानुपलम्भा व्यापाद्यमाना अपि सत्त्वा न व्रतातिचारनिमित्ताः, विषचूर्णादेर्यत्नानुपलम्भेऽप्युपभुक्तस्य प्राणनाशहेतुत्वोपलब्धेः । न च चतुर्थरसादेः प्रासुकोदकस्योपभोगाद्यमदोषः, तत्रापि सूक्ष्मसत्त्वसम्भवात् । करप्रक्षिप्ते तस्मिन् तन्निरीक्षणे पात्रोदकयोस्तद्व्यापत्तिदोषस्यापरिहार्यत्वात्, पात्रादिग्रहणे तु तत्प्रत्युपेक्षणस्य तद्रक्षणस्य च सुकरत्वान्न व्रतातिचारदोषापत्तिः । न च त्रिवारोद्वृत्तोष्णोदकस्यैव परिभोगाद्यमदोषः, तथाभूतस्य प्रतिगृहं तत्कालोपलभ्यमानस्याप्राप्तेः, प्राप्तावपि तृडपनोदाक्षमत्वात् तद्युक्तस्य धातुक्षमसंहननस्येदानीन्तनस्यैवाभ्यासोपपत्तेस्तस्य च दुर्गनिलिम्पनत्वात् । न च एडारद्धं तस्य तपोरूपतया न दोष इति वाच्यम्, अनशनादिवद्बाह्यतपस आन्तरतपउपचयहेतुत्वेनाश्रयणीयत्वात्, अन्याहारभूतस्य चातपस्त्वात् 'सो य तवो कायव्वो जेण मणो मंगुलं न चिंतेइ' [पञ्चव० गा० २१४] इत्याद्यागमप्रामाण्यात्, तत्र वस्त्रपात्रादिविकलस्य शक्तिहीनस्य यतेः सर्वसावद्ययोगप्रत्याख्यानं सम्भवतीति कथं न तस्य धर्मोपकरणत्वम् । अल्पमूल्याशोभनवस्त्रादिग्रहणाच्च न पथि गच्छतो यतेश्चौरादिभीतिरिति कथं न स्वीकृतमन्यस्या

ध्वनि सञ्चरतो नाभीष्टस्थानप्राप्ति र्नेत्र चः स्वीकृतमन्थ सोऽध्वनि सञ्चरन्नाभीष्टस्थानप्राप्तिमान्, यथा चौराद्युपद्रुते पथि सञ्चरन्नसहाय स्वीकृतमार्गोऽध्वग, स्वीकृतमथश्च मोक्षाध्वनि सञ्चरन् वस्त्राद्युपकरणवान् सितपट इति प्रयोग साध्यसाधको भवेत्, वस्त्रादिधर्मोपकरणस्याप्र मत्वस्य प्रतिपादितत्वादन्यथेहेतुरसिद्धश्च । अथाधम चौरास्तथाभूतमपि गृह्णन्तीति तत्प्राप्त्य तस्यासिद्धमिति चेत्तर्हि पुस्तकानामपि मोक्षाध्वसञ्चारिणान प्राह्य स्यात्, तदपि भगवता प्रतिषिद्धमिति न वक्तव्यम्, तत्प्रतिषिद्धपुस्तकादिग्राहिणामिदानीन्तनयतीना वस्त्रादिलोपकारित्वनायतित्वप्रसक्ते । ज्ञानाद्युपष्टम्भहेतुत्वेन तद्ग्रहणे पात्रादेरपि तत्त एव ग्रहणप्रसक्ति । न वा पात्राद्युपकरणरहितस्याध्वगस्याप्यभीष्टस्थानप्राप्ति सम्भविनीति दृष्टा वोऽध्यमङ्ग एव, मयस्य विशिष्टफलारम्भिणस्तदुपकरणरहितस्य तत्फलाप्रसाधकत्वात् तथाहि यो यन्नोपायविकलो नासौ तत्साधयति, यथा कृष्याद्युपायविकलस्तत्फलम्, अशेषकर्मविगमस्वभावमुक्तिफलवस्त्रादिधर्मोपकरणोपायविकलश्च मुनिर्भवद्भिरभ्युपगम्यत इति । न च क्षायिकज्ञानदर्शनचारित्राण्येव तदुपाय इति वक्तव्यम्, वस्त्रादिधर्मोपकरणविकलस्य क्षायिकज्ञानादित्वासम्भवात्तदेव धर्मोपकरणयुक्तस्य महाव्रतधारिणो निर्ग्रन्थत्वादार्यिकाणामपि मुक्तिप्राप्त्यविरोध इति ॥

इति श्रीतपागच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने मुनिवस्त्रादिसमर्थनं नाम चत्वारिंश सोपानम् ॥



## अथ स्त्रीमुक्तिसाधनम्

ननु स्त्रियो मुक्तिभाजो न भवन्ति स्त्रीत्वाच्चतुर्दशपूर्वसविद्धाविन्य इव, नैवम् सर्वासा मुक्तिभाक्त्वाभावसाधने सिद्धसाध्यत्वादभव्यस्त्रीणा मुक्तिसद्भावानभ्युपगमात्, भव्यस्त्रीणा तद्भाक्त्वाभावसाधनेऽपि तस्यैव दोषत्वाद्भव्यानामपि सर्वासा मुक्त्यनिष्टेः ' भव्वा वि ते अणंता सिद्धिपहं जेण पावेंति ' इति वचनप्रामाण्यात् । यद्यवाप्तसम्यग्दर्शना भव्यस्त्रिय इत्युच्यतेऽत्रापि स एव दोष, प्रोज्झितसम्यग्दर्शनाना तासा तदनिष्टे, अपरित्यक्तसम्यग्दर्शना इत्युक्तावपि न तद्दोषपरिहृतिः, अप्राप्तविकलचारित्राणा तत्प्राप्त्यनभ्युपगमात् । न चाविकलचारित्रप्राप्तिरेव स्त्रीत्वात्तासा न भवतीति वाच्यम्, पुरुषस्यापि पुरुषत्वात्तदभावप्रसक्ते । न च पुरुषे सकलसावद्ययोगनिवृत्तिरूपा चित्तपरिणति स्वात्मनि स्वसंवेदनाध्यक्षसिद्धा, परात्मनि चानुमानत इति वाच्यम्, स्त्रीणामपि तत्परिणतेस्तथैव सिद्धे ।

त्रिकल्कारणकर्मबीजभूताध्यवसानत्वात्, यस्तु नैव नासौ तथा, यथोभयसम्प्रतिपत्तिविषय पुरुष इति वैधर्म्यदृष्टान्त इति चेन्न, साध्यसाधनयो प्रतिबन्धासिद्धे, निरुक्ताध्यवसानम् यज्ञातो हि निवर्त्तमानमशेषकर्मक्षयाध्यवसायनिवर्त्तक कारण वा भवद्भवेत्, व्यापक वा, नाद्य, अशेषकर्मक्षयाध्यवसाय प्रति निरुक्ताध्यवसानस्याकारणत्वात्, येन तन्निवृत्त्या तस्यापि निवृत्तिर्भवेत्। कारणत्वे वा यत्राशेषकर्मक्षयाध्यवसान योगिनि सम्भवति तत्राध सप्तमनरकपृथिवीप्राप्तावन्ध्यकारणस्य बीजभूताध्यवसानस्य सद्भावात्, कार्यस्य कारणाव्यभिचारित्वात्तस्य नरकप्राप्तिसद्भाव इत्यनिष्टापत्ति । न च तत्र कारणसद्भावेऽपि कार्यं नोत्पद्यत इति वक्तव्यम्, अविकलकारणस्यावश्यतया स्वकार्यनिर्वर्त्तकत्वात्। न द्वितीय, व्याप्यस्य सत्त्वे व्यापकस्याप्यवश्य सद्भावात्तत्र तद्योपनादवस्थात्। न च यत्र क्लिष्टतराध्यवसायसद्भावस्तत्रातिशुभतराध्यवसायेन भाव्यमिति प्रतिबन्धसम्भव, तन्दुलमत्स्येन व्यभिचारात्, न च मनुष्यजातियोगित्वे सतीति विशेषण वाच्यम्, उत्तमसहननेन चारित्रपरिकालावधिसमयभाविना सर्वपर्याप्तिसम्पन्नेन तथाविधक्लिष्टपरिणामवता पुरुषेण व्यभिचारात्। न च तत्रातिशुभतर परिणामस्तत्राप्यशुभतरपरिणामेन भाव्यमित्यत्रापि प्रतिबन्ध, नरकादियोगिना व्यभिचारात् । स्त्रीणा सप्तमनरकपृथ्वीप्राप्तिनिबन्धनकर्मबीजाध्यवसायाभावो यथाप्तागमात् प्रतिपन्नस्तर्हि तत एवाशेषकर्मपरिक्षयनिबन्धनाध्यवसायसद्भावोऽपि प्रतिपन्न एव, न ह्यतीन्द्रिय एवंविधेऽर्थेऽर्वाग्दृशोऽस्मदादेराप्तागमादृतेऽन्यत् प्रमाणमस्ति, न च दृष्टेष्टाविरोधाप्तवचनमसत्तर्कानुसारिणातिविकल्पबाधामनुभवति, तेषामवस्तुसंस्पर्शित्वात् । न चात्र वस्तुन्यागमनिरपेक्षमनुमान प्रवर्त्तते, पक्षधर्मादिलिङ्गरूपस्य प्रमाणान्तरत प्रतिपत्तुमशक्त, प्रतिपत्तौ वा साध्यस्यापि प्रतिबन्धग्राहिप्रमाणत प्रतिपत्तेर्नैकान्ततोऽतीन्द्रियता भवेत्, आगमानुसारि चानुमान न बाधकम्, प्रकृतवस्तुसंवादकत्वात् । न चाप्तवचन स्त्रीनिर्वाणप्रतिपादकमप्रमाणम्, सप्तमनरकप्राप्तिप्रतिषेधकञ्च प्रमाणमिति वक्तव्यम्, प्रामाण्यनिबन्धनस्याप्तप्रणीतत्वादेरुभयत्राविशेषात् । एकमाप्तप्रणीतमेव न भवतीति चेन्न, इतरत्राप्यस्य समानत्वात्, पूर्वापरोपनिबद्धाशेषदृष्टादृष्टप्रयोजनार्थप्रतिपादकावान्तरवाक्यसमूहात्मकैकमहावाक्यरूपतयाऽर्हदागमस्यैकत्वात् तथा चान्तरवाक्याना केषाञ्चिदप्रामाण्ये सर्वस्याप्यागमस्याप्रामाण्यप्रसक्त, अङ्गदुष्टत्वे तदात्मकाङ्गिनोऽपि दुष्टत्वापत्ते । न च प्रद-

सर्वार्थसिद्धिप्राप्तिरपि न तासा समस्ति तथाविधपरिणामविशुद्धिविरहात्, तथा च सप्तमपृथ्वीप्राप्तिरपि न तासा सम्भवति । न चास्ति सप्तमपृथिवीप्राप्तिविगतेषु सामर्थ्याभावादपि न ता प्राप्तिरिति पूरणीयम् ॥ कि त्वेवम् अत्रापि तासा सर्वार्थसिद्धिप्राप्तिपरिणतिनास्तीत्यत्र साधकं नास्ति किञ्चित् प्रमाणम्, अन्यत्र प्रतिपत्तिं विना केवलमपि उमादिभिस्तथा समर्थनं च न सार्थकमिति साध्यं वाच्यात् ॥

र्थितवाक्य सर्वज्ञप्रणीततयाऽस्मान् प्रत्यसिद्धमिति वाच्यम्, नास्तिकादीन् प्रति पुरुषनिर्वाणावेदकस्यापि तत्प्रणीतत्वेनासिद्ध्या तान् प्रति तत्प्रणीतत्वसाधकतयोपन्यस्यमानाया युक्तेरत्रापि समानत्वात्, पूर्वापरैकवाक्यत्वदृष्टादृष्टाबाधितत्वादरविशेषात् । ननु क्षीणा घातिकर्मक्षयनिमित्तमाद्यशुक्लध्यानद्वय न सम्भवतीति न निर्वाणप्राप्तिसम्भव, 'आद्ये पूर्वविद' इति वचनात् पूर्वधरस्यैव तयो सद्भावात्, न च पूर्वधरत्व तासाम, तत्रानधिकारित्वादिति चेन्न, तथा सति प्राक्तनभवानधीतपूर्वाणा वर्त्तमानतीर्थाधिपत्यादीनामपि तत्र भवेत्तदध्ययना सम्भवादाद्यशुक्लध्यानद्वयासम्भवतस्तन्निमित्तघातिकर्मक्षयसमुद्भूताशेषतत्त्वावबोधस्वभावकेवलज्ञानाभावे न मुक्तिसङ्गति स्यादित्यनिष्टापत्ति । अथ ज्ञानयोगागम्यसामर्थ्ययोगावसेयभावेष्वतिसूक्ष्मेष्वपि तेषा विशिष्टक्षयोपशमवीर्यविशेषप्रभवप्रभावयोगात् पूर्वधरस्येव बोधातिरेकसद्भावादाद्यशुक्लध्यानद्वयप्राप्ते कैवल्यावाप्तिक्रमेण मुक्त्यवाप्तिरिति न दोष, तदध्ययनमन्तरेणापि विशिष्टक्षयोपशमसमुद्भूतज्ञानात पूर्वार्थस्य सम्भवादिति चेत्तर्हि निर्ग्रन्थीनामप्येव द्वितयसम्भवे न कश्चिद्दोष, अन्यथा मरुदेवीस्वामिनीप्रभृतीना जन्मान्तरेऽप्यनधीतपूर्वाणा न मुक्तिप्राप्तिर्भवेन्न चासौ तेषामसिद्धा, सिद्धप्राभृतादिग्रन्थेषु स्त्रीलिङ्गसिद्धाना प्रतिपादनात्, न च ते अप्रमाणम्, सर्वज्ञप्रणीतत्वेन तेषा प्रामाण्यात् । न च मायागारवादिभूयस्त्वादबलाना न मुक्तिप्राप्ति, तदा तासा तद्भूयस्त्वासम्भवात्, प्राक् तु पुरुषाणामपि तत्सम्भवोऽविरुद्ध । न चाल्पसत्त्वा क्रूराध्यवसायाश्च ता इति वाच्यम्, सत्त्वस्य कार्यगम्यत्वात्तस्य च तासु दर्शनादल्पसत्त्वासिद्ध, दृश्यन्ते ह्यसदभियोगादौ तृणवत्ता प्राणपरित्याग कुर्वाणा, परीषहोपसर्गाभिभव चाङ्गीकृतमहाव्रता विदधाना । क्रूराध्यवसायत्व दृढप्रहारिप्रभृतीना प्रागवस्थाया तद्भवे विद्यमानमपि न मुक्तिप्राप्तिप्रतिबन्धकम्, तदवस्थाया तु नास्त्यभाव एव । धर्मे पुरुषस्योत्तमत्वात्तासामनुत्तमत्वान्न मुक्तिप्राप्तिरिति चेन्न, अन्यगुणापेक्षयाऽनुत्तमत्वस्य मुक्तिप्राप्त्यप्रतिबन्धकत्वात्, अन्यथा तीर्थकृद्गुणापेक्षया गणधरादेरप्यनुत्तमत्वान्मुक्तिप्राप्त्यभावो भवेत्, तस्मान्न युक्त्यागमाभ्या तासा मुक्त्यभाव प्रतिपत्तु शक्य ॥ यत्तु भगवत्प्रतिमाया आभरणादिभिर्भूषा न विधेयेति दिगम्बरैरुच्यते तदप्यर्हत्प्रणीतागमापरिज्ञानस्य विजृम्भितमुपलक्ष्यते तत्करणस्य शुभभावनिमित्ततया कर्मक्षयावन्ध्यकारणत्वात्, भगवत्प्रतिमाया भूषणारोपण हि कर्मक्षयकारणम्, कर्तुर्मन प्रसादजनकत्वात्, कुङ्कुमाद्यालेपनवत्, न च छद्मस्थावस्थाया भगवता भूषणादेरनङ्गीकृतत्वान्न तत्प्रतिकृतौ तद्विधेयम्, स्नानमाल्यपुष्पादिधारणस्यापि तदवस्थाया भगवताऽनाश्रितत्वात्तत्र विधेय स्यात् । अथ मज्जनकादिषु तदभिषेकाद

विप्रादिभिस्तस्य विहितत्वादस्माभिरपि इत्यनुकरणाभिः प्रयोजनैस्तत्तत्र विधीयते तर्हि तत्र गवाभरणादिभिर्विभूषणादिकमपि विधेयम्, कृतानुकरणादेः समानत्वात्। एवम् न्यदप्यागमबाह्यं परपरिकल्पितमार्गमयुक्तिप्रदर्शनेन प्रतिषेद्धव्यम्। तदेवमनधीताश्रुतयथावदपरिभावितागमतात्पर्या दिगम्बरा इवाप्राज्ञा विगोपयन्तीति व्यवस्थितम्॥ ६५॥

यत एव तत —

जह जह बहुस्सुओ सम्मओ य सिस्सगणसंपरिवुडो य।
अविणिच्छिओ य समए तह तह सिद्धंतपडिणीओ॥६६॥

यथा यथा बहुश्रुतः सम्मतश्च शिष्यगणसंपरिवृतश्च।
अविनिश्चितश्च समये तथा तथा सिद्धान्तप्रत्यनीकः॥ छाया॥

यथेति, सम्यगर्थमनवधार्यानेकशास्त्रश्रवणमात्रतः शास्त्रज्ञत्वेन तथाविधापराविदितशास्त्राभिप्रायाणां सम्मतोऽत एव श्रुतविशेषानभिज्ञे शिष्यगणे संपरिवृतः, तथाविधपरिवारव्यामोहाच्छास्त्रपर्यालोचनेऽनादरात् समयेऽविनिश्चितश्च यथा यथा भवति तथा तथा सिद्धान्तप्रत्यनीकोऽपि, यथावस्थितवस्तुस्वरूपप्रकाशकागमप्रतिपक्षो निस्सारप्ररूपणयाऽन्यागमेभ्योऽपि भगवदागममधः करोतीति यावत्॥ ६६॥

एवञ्च शास्त्रमधीत्य तदर्थावधारणं विधेयम्, अवधृततदर्थश्च नयप्रमाणाभिप्रायतो यथावदर्थः परिभावनीयोऽन्यथा तत्फलपरिज्ञानविकलता स्यादित्याह—

चरणकरणप्पहाणा ससमयपरसमयमुक्कवावारा।
चरणकरणस्स सारं णिच्छयसुद्धं ण याणंति॥ ६७॥

चरणकरणप्रधानाः स्वसमयपरसमयमुक्तव्यापाराः।
चरणकरणयोः सारं निश्चयशुद्धं न जानन्ति॥ छाया॥

चरणेति, व्रतश्रमणधर्मसंयमवैयावृत्त्यब्रह्मगुप्तिज्ञानादित्रयतपःक्रोधादिनिग्रहस्वरूपं चरणम्, पिण्डविशुद्धिसमितिभावनाप्रतिमेन्द्रियनिरोधप्रतिलेखनगुप्त्यभिग्रहस्वरूपं करणम्, तदनुष्ठानतत्पराः। अथ स्वसमयोऽनेकान्तात्मकवस्तुप्ररूपणादयं परसमयः केवलनयाभिप्रायप्रतिपादनादित्येतस्मिन् परिज्ञानेऽनादृताः अनेकान्तात्मकवस्तुतत्त्वं यथावदनवबुद्ध्यमानाश्चरणकरणयोः फलं ज्ञानदर्शनयोगात्मकं निष्कलङ्कं नानुभवन्ति, तस्य ज्ञानदर्शनचारित्रात्मककारणप्रभवत्वात् कारणाभावे च कार्यस्यासम्भवादन्यथा तस्य निर्हेतुकत्वापत्तेः, चरणकरणयोश्चारित्रात्मकत्वाद्द्रव्यपर्यायात्मकजीवादितत्त्वावगमस्वभावद्रव्यभावेऽभावादिति॥ ६७॥

सम्यग्दर्शनस्य सम्यग्ज्ञानादभेदात् ज्ञानक्रिययोरन्यतरविकलयोर्नाशेषकर्मक्षयलक्षणफलं[1] निर्वर्तकत्व सम्भवतीति प्रतिपादयति—

णाण किरियारहिय किरियामेत्त च दो वि एगता ।
असमत्था दाएउ जम्ममरणदुक्ख मा भाइ ॥ ६८ ॥

ज्ञान क्रियारहित क्रियामात्रश्च द्वावप्येकान्तौ ।
असमर्थौ दर्शयितु जन्ममरणदुःखेभ्यो मा भैषी ॥ छाया ॥

ज्ञानमिति, यथावज्जीवादितत्त्वप्रकाशक ज्ञान यथोक्तानुष्ठानरहित जन्ममरणदुःखेभ्यो मा भैषीरिति दर्शयितुमसमर्थम्, न हि ज्ञानमात्रेणैव पुरुषो भयेभ्यो मुच्यते क्रियारहितत्वात्, दृष्टप्रदीपनकपलायनमार्गपङ्गुवत् । क्रियामात्र वा ज्ञानरहित—न तेभ्यो मा भैषीरिति दर्शयितु समर्थम्, न हि क्रियामात्रात् पुरुषो भयेभ्यो मुच्यते सज्ज्ञानविकलत्वात् प्रदीपनकभयप्रपलायमानान्धवत् । उभयसद्भावस्तु तेभ्यो मा भैषीरिति दर्शयितु समर्थ, तथाहि सम्यग्ज्ञानक्रियावान् भयेभ्यो मुच्यते, उभयसयोगवत्त्वात्, प्रदीपनकभयान्धस्कन्धारूढपङ्गुवत्, तस्मात्सम्यग्ज्ञानादित्रितयनयसमूहात् मुक्ति, नयसमूहविषयश्च सम्यग्ज्ञान श्रद्धानञ्च तद्विषय सम्यग्दर्शन तत्पूर्वकश्चाशेषपापक्रियानिवृत्तिलक्षण चारित्रम्, प्रधानोपसर्जनभावेन मुख्यवृत्त्या वा तत्त्रितयप्रदर्शकश्च वाक्यमागमो नान्य, एकान्तप्रतिपादकस्यासदर्थत्वेन विसंवादकतया तस्य प्राधान्यानुपपत्ते, जिनवचनस्य तु तद्विपर्ययेण दृष्टवदृष्टार्थेऽपि प्रामाण्यसङ्गते: ॥ ६८ ॥

तस्य तथाभूतस्य स्तुतिप्रतिपादनाय मङ्गलार्थत्वात् प्रकरणपरिसमाप्तौ गाथासूत्रमाह—

भद्द मिच्छादसणसमूहमइयस्स अमयसारस्स ।
जिणवयणस्स भगवओ सविग्गसुहाहिगम्मस्स ॥ ६९ ॥

भद्र मिथ्यादर्शनसमूहमयस्यामृतसारस्य ।
जिनवचनस्य भगवत सविग्नसुखाधिगम्यस्य ॥ छाया ॥

भद्रमिति, भगवतो जिनवचनस्य भद्रमस्तु, कथभूतस्य मिथ्यादर्शनसमूहमयस्य तथात्वेऽप्यमृतसारस्य, न च वाच्य मिथ्यादर्शनसमूहमय सत् विषकणिकासमूहमयस्येव कथ सम्यग्रूपतामासादयतीति, परस्परनिरपेक्षसमहाविनयाद्यन्तरादिमिथ्यादर्शनाना

1 मतिश्रुतादिकं ज्ञान चारित्रप्राप्तौ प्रधानं कारणम्, ज्ञानदर्शनचारित्रहेयोपादेय वस्तुनो ज्ञानमन्तरेणापरिज्ञानात् अपरिज्ञातस्य च यथावत्कर्तुमशक्यत्वात् [illegible] चरणात्तु निर्वाण भवति तस्मात्सर्वसवररूपनिर्वाणस्य चरणमेव प्रधान कारण ज्ञानन्तु [illegible] कारणम् अतएव ज्ञानस्य सारश्चरणमिति आप्तवचनमपि सगच्छते । यदि ज्ञानस्य [illegible] क्रियायाश्चान तयोर्गुणप्रधानभाव अथ युगपद् द्वे अपि [illegible] प्राधान्यमित्याशय ॥

परस्परसव्यपेक्षतासमासादितानेकाकाररूपाणां विपकणिकासमूहविशेषमयस्यामृतसन्दोहस्येव सम्यक्त्वापत्तेः । दृश्यन्ते हि विषादयो भावाः परस्परसंयोगविशेषेण परिणत्यन्तरमापन्ना अगदरूपतामासादयन्तः, तथा गन्धाश्मप्रभृतयस्तु विशिष्टसंयोगेनावाप्तद्रव्यान्तरा अमृतविप्राप्तिनिमित्ततापन्नाः, अत एव निरपेक्षा नैगमादयो दुर्नयाः सापेक्षास्तु सुनया उच्यन्ते । न विद्यते मृतं मरणं यस्मिन्नसौ अमृतो मोक्षः, तं सारयति गमयति प्रापयति वा, तस्यामृतसारस्य, अवन्ध्यमोक्षकारणत्वान्मोक्षप्रतिपादकत्वाच्च । रागाद्यदोषशत्रुजेतृपुरुषविशेषेणोच्यत इति जिनवचनं तस्य, अनेन विशिष्टपुरुषप्रणेतृत्वनिबन्धनं प्रामाण्यं निगमयति क्षीराश्रवाद्यनेकलब्ध्याद्यैश्वर्योपेतो भगवत इत्यनेनापि विशेषणेन तस्यैहिकसम्यद्विशेषजनकत्वमाह । पुनः कीदृशस्य वचनस्य संविग्नसुखाधिगम्यस्य, संविग्नैः संसारभयोद्वेगाविर्भूतमोक्षाभिलाषैरपकृष्यमाणरागद्वेषाहङ्कारकालुष्यैरिदमेव जिनवचनं तत्त्वमित्येव सुखेनावगम्यते यत्तत् संविग्नसुखाभिगम्यं तस्य, एतेनापि विशिष्टबुध्यतिशयसम्पत्समन्वितयतिवृषभनिषेव्यत्वमस्य प्रतिपादयति, एवंविधगुणाध्यासितस्य जिनवचनस्य सामायिकादिबिन्दुसारपर्यन्तश्रुतात्मनो भगवते कल्याणमस्तु, इतिप्रकरणसमाप्तावन्त्यमङ्गलप्रतिपादिकाशिष्टस्तुतिः ॥ ६९ ॥

विख्याताहतशासने धृततपागच्छाम्बरार्योदय-
क्षोणीध्रेऽभवदुष्णभानुविजयानन्दाख्यसूरीश्वरः ।
यद्विद्यारुचा तत जिनपतेर्मूर्त्तिप्रतिक्षेपकः
घाद्ध्वान्तमनीयतानु तुहिनक्ष्माभृद्गभीरां गुहाम् ॥ १ ॥
योगाभ्यासवशार्तितिद्वयगणः साक्षात्तपोविग्रहो
वादिव्रातवचोविमर्दनपटुः शाखाटवीकेसरी ।
अर्हच्छासनवारिधिप्रमथनाद्रत्नत्रयं प्राप्तवान्
जातः श्रीकमलाख्यसूरिमघवा तत्पट्टभानुः सुधीः ॥ २ ॥
कृत्वा तत्पदपङ्कजं हृदि सदा तत्पट्टविद्योतनो,
राकायां नभसो सुधाब्धिनयनैर्वर्षे मिते धर्मके ।
ध्यात्वा पार्श्वजिनेशपादकमलं श्रीस्तम्भपुर्यामहम्
व्याख्यानेन च लब्धिसूरिमुनिपः सोपानपूर्तिं व्यधाम् ॥ ३ ॥
सोपानवृन्दं एष भवतु न वा सत्हृदयतमच्छित्त्यै ।
सरलहृदा साधूनां चेतोनलिनीपतिर्भवति नूनम् ॥ ४ ॥

इति श्रीतपोगच्छनभोमणि श्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कार श्रीमद्विजयकमलसूरीश्वरचरणनलिनन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलिते सम्मतितत्त्वसोपाने स्त्रीमुक्तिसमर्थनं नाम एकचत्वारिंशं सोपानम् ॥

---

समाप्तश्च सम्मतितत्त्वसोपानम् ।

| गाथा | पृ | प | गाथा | पृ | प |
|---|---|---|---|---|---|
| ज अप्पुट्ठा भावा (६१ गा०) | २५० | ८ | दव्वट्ठियस्स जो चेव | १८० | २० |
| ज अप्पुट्ठे भावे | २५० | ११ | दव्वतरभूया | २६६ | २३ |
| ज काविल दरिसण | २८४ | २१ | दव्वतरसजोगाहि | २०६ | १ |
| ज च पुण अरिहया | २६२ | ० | दव्वस्स ठिइ जम्म | २६६ | १३ |
| ज पच्चक्खग्गाहण | २४० | २१ | दव्व खित्त काल | ३३३ | १० |
| जंपति अत्थि समये | २६३ | २ | दव्व जहा परिणय | २०९ | १६ |
| ज सामण्णग्गहण | १८९ | ५ | दव्व पज्जवविउय | १४० | १० |
| णत्थि ण णिच्चो ण कुणइ | ३२१ | १८ | दुविहो धम्मावाओ | ३८१ | ४ |
| ण य तइओ अत्थि णओ | १४८ | १४ | दूरे ता अण्णत्त | २६१ | १८ |
| ण य दव्वट्ठियपक्खे | १५० | ४ | दो उण णया भगवया | २६२ | १० |
| ण य बाहिरओ भावो | १७८ | २६ | दो हि वि णएहि णीअ | २८१ | ११ |
| ण य होइ जोव्वणत्थो | १७४ | १० | दसणणाणावरणक्खए | २३० | २२ |
| ण वि अत्थि अण्णवादो | २६७ | १५ | दसणपुव्व णाण | २४७ | ११ |
| ण तु सासणभत्ती | ३४० | १८ | दसणमोग्गहमेत्त | २४७ | १ |
| णाण अपुट्ठे अविसये | २४८ | १७ | नत्थि पुढवीविसिट्ठो | ३१५ | २१ |
| णाण किरियारहिय | ३६३ | ३ | नाम ठवणा दविए त्ति | १२३ | २७ |
| णियमेण सद्दहतो | २६८ | १४ | पच्चुप्पण्णम्मि वि पज्जयम्मि | २६० | ११ |
| णिययवयणिज्जसच्चा | १५८ | १८ | पच्चुप्पन्न भाव | २५७ | १९ |
| तम्हा अण्णो जीवो | २१४ | ६ | पज्जवणयवोक्कत | १३८ | १ |
| तम्हा अहिगयसुत्तेण | ३५४ | १३ | पज्जवणिस्सामण्ण | १३७ | ४ |
| तम्हा चउव्विभागा | २४१ | १ | पडिपुण्णजोव्वणगुणो | १७४ | १ |
| तम्हा सव्वे वि णया | १५२ | ४ | पण्णवणिज्जा भावा | २४४ | १८ |
| तह णिययवायसुविणिच्छिया | १५२ | २० | परपज्जवेहि असरिसगमेहि | २५७ | २५ |
| तह सव्वे णयवाया | १५२ | २७ | परवत्तव्वयपक्खा | २४१ | २२ |
| तिण्णि वि उप्पायाई | २७२ | १३ | परिगमण पज्जाओ | २६२ | १८ |
| तित्थयरवयणसगह | ८५ | १५ | परिसुद्धो नयवाओ | २८३ | २२ |
| ते उ भयणोवणीया | ३११ | ९ | परिसुद्ध सायार | २३९ | २० |
| तेहि अतीताणागय | १७ | ५ | पाडेक्कनयपहगय | ३३९ | १३ |
| दव्वट्ठियोत्ति तम्हा | १३८ | १९ | पिउपुत्तणत्तु भव्वय | २६४ | १३ |
| दव्वट्ठिओ वि होऊण | २३४ | १ | पुरिसज्जाय तु पडुच्च | १८१ | १३ |
| दव्वट्ठियणयपयडी | १०७ | १० | पुरिसम्मि पुरिससद्दो | १६० | १५ |
| दव्वट्ठियवत्तव्व अवत्थु | १३० | ५ | बहुयाण एगसद्दे | २७९ | ७ |
| दव्वट्ठियवत्तव्व सव्व | १५० | ४ | भयणा वि हु भइयव्वा | १५१ | १७ |
| दव्वट्ठियवत्तव्व सामण्ण | ३३१ | ३ | भण्णइ खीणावरणे | २३७ | ७ |
| दव्वट्ठियस्स आया | १८० | १९ | भण्णइ जह चउणाणी | २४१ | ९ |

| गाथा | पृ | प | गाथा | पृ | प |
|---|---|---|---|---|---|
| भण्णइ धिसमपरिणय | २६६ | ८ | सम्मद्दसणमिणमो | ३४० | ८ |
| भण्णइ सबधवसा | २८१ | १२ | सनियच्छणिङ्घियप्प | १६६ | १४ |
| भद्द मिच्छद्दसणसमूह | ३६३ | १९ | सव्वणयसमूहम्मि वि | १४९ | १६ |
| मयणा नि हु भइयवा | २८७ | २१ | साई अपज्जवसिय | २५१ | २८ |
| भविओ सम्मद्दसण | २८७ | ४ | सामान्निओ वि समुदयकओ | २७१ | १ |
| मइसुयणाणणिमित्तो | २८९ | १३ | सामण्णम्मि विसेसो | २५६ | २२ |
| मणपज्जवणाणतो | २३४ | १६ | साहम्मउ व्व अत्थं | ३२४ | १ |
| मणपज्जवणाण दसण | २४८ | २६ | सिज्झत्तणेण य पुणो | २५३ | १७ |
| मूलणिमेण पज्जवणयस्स | १०८ | ८ | सिद्ध सिद्धत्थाण | १ | ११ |
| रूआइ पज्जवा जे देहे | १७८ | १ | सीसमइविप्फारण | २६७ | ७ |
| रूवरसगधफासा | २६१ | ७ | सुत्त अत्थनिमेण | ३१३ | २१ |
| लोइयपरिच्छयसुहो | १५३ | २० | सुत्तम्मि चेव साइ | २१३ | १९ |
| वज्जणपज्जायस्स उ | १६६ | १ | सुहदुक्ख सम्पओगो | १० | १८ |
| विगमस्स वि एस विही | २७२ | २४ | सोऊण समासओ चिय | १५१ | १३ |
| सब्भावासब्भावे देसो | १७८ | २ | सघज्जमसत्तञ्ञ | २५१ | १ |
| सब्भावे आइट्ठो | १७१ | ६ | सतम्मि केवले दसणम्मि | २२८ | १५ |
| समयपरमाथवित्थर | ६० | ५ | हेउविसओवणीअ | ३११ | १९ |
| सम्मण्णाणे णियमेण | २५२ | १६ | होआहि दुगुणमहुर | २११ | २ |


१६६ सम्पूर्ण श्लोकसंख्या

